MANGALVEDKAR SERIES—4 H. K. Varkhedi

# SHRI JAYARAJA STUTI

[with Sanskrit & Canarese Commentaries - All in Devanagari Characters]



॥ श्रीः ॥



॥ श्रीमट्टीकाकृत्पादाचार्यो विजयते ॥

*Published by:*

**M. K. VASUDEVA RAO,**
43, AMMAMANDAPAM ROAD, SRIRANGAM,
TIRUCHIRAPALLI-6.

 1956 [*Re. 0-8-0*

॥ श्रीः ॥

In addition to those referred to in our विज्ञा (in canarese) published in this booklet, the follo ing gentlemen and several others have helped either by lending their books or offering th advices for the successful completion of the wo to whom we are ever grateful.

1. Shri V. SRINIVASACHARI, B. A.,
   Librarian, Saraswati Mahal Library, Tanjo
2. Shri AVADHANI VITTALACHARYA,
   Vidwan, Shri Uttaradi Mutt Pathasala, Mannargudi.
3. Shri AVADHANI BHIMACHARYA,
   Sudha Pandit, Srirangam.
4. Shri VATTANGADU HARIYACHARYA, „ &
   Adhyapaka, Madhwa Mahajana Sabha Pathasala, Srirangam.
5. Shri V. NAGARAJACHARYA,
   'Mimamsa Vidwan & Siromani' (grandson of Shri Kowlagi Yadunathacharya), Madras.
6. Shri HULAGI PANDURANGACHARYA, Dharwar
7. Shri G. S. RAO, Music Teacher, Manamadurai

Our appreciation for the promptness and ne execution of this booklet by SRI VANI VILAS PRES SRIRANGAM, is unbounded.

PUBLISHER.

मङ्गळ्वेड्कर् सीरीस् — ४.

॥ श्रीः ॥

श्री १०८ श्रीसत्यप्रियतीर्थविरचिता

# ॥ श्रीजयराजस्तुतिः ॥

( संस्कृतव्याख्योपेता, कर्णाटकभाषान्तरोपेता च ॥ )

( श्रीसत्यप्रियतीर्थानां महिमा च )

॥ श्रीदिग्विजयरामो विजयते ॥



" पक्षीशासनपादपूजनरतः कक्षीकृतो यद्वयो
लक्षीकृत्य सभातले रटद्सरक्षीश्वरानाक्षिपत् ।
अक्षीणप्रतिभाभरो विधिसरोजाक्षीविहाराकरो
लक्ष्मीं नः कलयेज्जयी सुचिरमध्यक्षीकृतक्षोभणाम् ॥ "

— ( श्लोक १३, पु. १४ )

॥ श्रीः ॥

# ॥ विषयानुक्रमणिका ॥









॥ श्रीः ॥

॥ श्रीराजगोपालविजयते ॥

॥ राजमानशुभाकार राजीवायतलोचन राजशेखरवंद्यांघ्रे राजगोपालपाहिमां ॥ १ ॥ ॥ समस्तकल्याणगुणैस्सुपूर्णं दोषातिदूरंनिगमैकवेद्यं अभीष्टदंतंशरणंरमेश श्रीराजगोप प्रणमामिनित्य ॥ २ ॥



தஞ்சாவூர் ஜில்லாவில் பெயர்பெற்ற இராஜமன்னார் கோயிலில் கோபிலமஹரிஷிக்கு ப்ரத்யக்ஷமான ஸ்ரீராஜகோபாலமூர்த்தி.

तंजावूर् जिल्ला, मन्नार्गुडि क्षेत्रमूर्तियाद श्रीगोभिलमहर्षिगे प्रत्यक्षराद श्रीराजगोपालदेवरु.

॥ श्रीः ॥



## ॥ श्रीराजगोपालस्तोत्रम् ॥

राजमानशुभाकार राजीवायतलोचन ।
राजशेखरवंद्यांघ्रे राजगोपाल पाहि माम् ॥ १ ॥

समस्तकल्याणगुणैस्सुपूर्णं
दोषातिदूरं निगमैकवेद्यम् ।
अभीष्टदं तं शरणं रमेशं
श्रीराजगोपं प्रणमामि नित्यम् ॥ २ ॥

आदौ गोभिलमौनिमुख्यविनतः श्रीदक्षिणद्वारका-
वासः सेवकराजशेखरकृतन्नत्वापहारिप्रभुः ।
रुक्मिण्या सुमनोज्ञया च सहितः श्रीसत्यभामाख्यया
हारिद्राख्यनदीतटाकनिलयः कुर्यात् सदा मंगळम् ॥ ३ ॥

श्रीमच्चंपककानने निवसतः श्रीराजगोपप्रभोः
कल्याणे सुमहोत्सवे विरचिते रत्नोज्वले मण्टपे ।
मुक्ताजालविराजिता धवलिता लाजाक्षता संततं
माणिक्यावळिशोभदीपनिलयः कुर्यात्सदा मंगळम् ॥ ४ ॥

इति श्रीराजगोपालस्तोत्रम् संपूर्णम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥



ई चिक्क ग्रंथवु ननगे परमपूज्यराद (मन्नार्गुडि ताल्लूका करुप्पुकिळार् मत्तु गोप्रळयम ग्रामगळल्लि कर्णम् केलस माडि कोनेलि श्रीरङ्गक्षेत्रक्के बंदु केलवु दिवस इद्दु २७-१०-१९३० कार्तीकशुद्ध षष्ठी तिथियल्लि वैकुंठप्राप्तियन्नु होंदिद) नन्न पितामहराद ती. रा. रा. मङ्गळ्वेड्कर् गोविंद वासुदेव शर्मरवर, तथा नन्न पितामहीयाद मातोश्री रङ्गू भायि अवर, स्मरणेक्कोस्कर नन्न तीर्थरूपराद वा. कुप्पण्णाराय शर्मर आज्ञाप्रकार, प्रकटिसलप्पट्टिदे.

श्रीरङ्गम्,
चैत्रशुद्ध त्रयोदशी,
१८७८.

एम्. के. वासुदेवः





॥ श्रीः ॥

C. RAMACHANDRA CHARYA,
Widyapravina, Vidyanidhi,
Siromani, Vidwan etc.,
*Professor of Mimamsa,*
*Maharaja's Sanskrit College,*

143, Ramavilas Agrahar,
MYSORE,
22—5—56.

## ॥ अभिनन्दनम् ॥

अशेषवैष्णवेभ्यो विज्ञापनम् ॥

श्रीजयराजस्तुतिप्रभृतीनां कोशानां मुद्रापणेन प्रकाशकानां श्री M. K. वासुदेवमहोदयानां, तथा विषयेऽस्मिन् विशेषतः साहायकं सम्पादितवतां विद्वच्छिरोमणीचूडामणीनां श्री म. वे. गुत्तलोपाह्व-हयवदनाचार्याणाञ्च कृते अभिनन्दनं, बहूनां श्रोतॄणामानुकूल्याय कर्णाटकभाषया सूचयामि ॥

सकलानिष्टनिवृत्तिपूर्वकस्वयोग्यानन्दाविर्भावरूप मोक्षक्के हरिप्रसाद, हरिभक्ति, गुरुप्रसाद, क्रमदिन्द गुरुभक्तियु कारणवु. गुरुगळु अन्दरे स्वयं संशयशून्यरागि, शिष्यर संशयपरिहारकराद महानुभावरु. इन्तह गुरुगळु नालकु प्रकार वुळ्ळवरु.

१. उपनयनपदवाच्य ब्रह्मोपदेशमाडतक्क पितामुन्तादवरु.

२. बिम्बोपदेशमाडतक्क नियतगुरुगळु. **इवरिब्बरु असाधारण गुरुगळु.**

३. विरजानदीस्नानक्के पूर्वभावियागि तत्वोपदेशकराद चतुर्मुखब्रह्मदेवरु.

४. श्रीपतिनारायणरु. **इवरिब्बरु साधारण गुरुगळु.**

नालकने गुरुवाद नारायणनु आचार्यर अन्तर्यामियागिये उपदेशमाडतकवनु होरतु, प्रत्यक्षवागि अल्ल. ईविषयवन्नु तलवकारोपनिषन्मूलकवागि तिळियबहुदु.

यक्षरूपनाद नारायणनु, इन्द्रनु तन्न संनिधिगे बरुव समयदल्लि मरेयादनु. नारायणन अभिप्रायवु हीगे. अग्नि मत्तु नासिक्यवायु इवरकिंन्त इन्द्रनु अधिक बुद्धियुळ्ळवनु. आदुदरिन्द "नन्न स्वरूपविषयदल्लि प्रश्नमाडुवनु. आग नानु साक्षात् बिम्बोपदेशमाडुबेकागि बन्दीतु. नन्निन्द साक्षात् बिम्बोपदेशवन्नु पडियलिक्के इन्द्रनु अनर्हनु. पार्वतीदेवियॆ साक्षात् इन्द्रनिगे उपदेशमाडलु अर्हळु"; येन्त. अनन्तर पार्वतीदेवियु यक्षस्वरूपवन्नु इन्द्रनिगे उपदेशमाडिदळु.

इन्तह गुरुगळु, यथासंभव साक्षात् सच्छास्त्रोपदेशकराद आचार्यरन्नु प्रारम्भिसि ब्रह्मदेवरपर्यन्तरु.

इन्तह गुरुगळल्लि भक्तिगे, गुरुसेवेयु कारण. गुरुसेवेयेन्दरे गुर्वधिष्ठानवादप्रतिमागळ पूजादिगळु. प्रकृत अन्तह प्रतिमारूपवाद गुरुचरित्रप्रतिपादकवाद पुस्तकगळ, मत्तु गुरुचित्रगळन्नु प्रकाशपडिसुत्तिरुव चिरञ्जीवि वासुदेवराव् (मङ्गळवेड्कर) इवरिगे इतोऽप्यधिकवाद गुरुभक्तियन्नु श्रीहरिगुरुगळु अनुग्रहसिलियन्त प्रार्थनामाडुव,

**चतुर्वेदी रामचन्द्राचार्यः ॥**

विद्वान्, विद्यानिधिः, शिरोमणिः, विद्याप्रवीणः, मीमांसाप्रधानोपाध्यायः,
श्रीमन्महाराज संस्कृतमहापाठशाला, मैसूरु.





॥ श्रीः ॥

॥ श्रीमद्धनुमद्भीममध्वांतर्गत-
श्रीरामकृष्णवेदव्यासात्मक श्रीलक्ष्मीहयग्रीवाय नमः ॥

(अनन्तरपुटे बदरिकाश्रमचित्रस्याधस्तान्निर्दिष्टसुमध्वविजयस्थश्लोकस्य कन्नडभाषानुवादः)

सज्जनरिगॆ ज्ञान कोडोदक्कोस्कर भूमियल्लि अवतारमाडिदंथ आनन्दवेनु, विज्ञानवेनु, इवुगळे शरीरवागि उळ्ळंथ विष्णु, वायु, एंत हेसरुळ्ळंथ (इब्बरु) देवतेगळु वेदव्यासरु, आनन्दतीर्थरु, एंत हेसरुळ्ळवरागि बदरिकाश्रमदल्लि आ कालदल्लि शोभिसिदरु.




" सज्ज्ञानायानन्दविज्ञानमूर्तौ प्राप्तौ पृथ्वीमाश्रमे तत्र तावत् ।
जाज्वल्येते विष्णुवायू स देवौ वेदव्यासानन्दतीर्थाभिधानौ ॥ "

— सुमध्वविजये सर्गः ७ श्लोकः ५६

॥ श्रीः ॥

॥ श्रीगुरुभ्यो नमः ॥

# ॥ विज्ञापने ॥

---

**श्री १०८ श्रीसत्यप्रियतीर्थरु** माडिरुव श्रीजयराजस्तुतियु अतिप्रौढवागिरोणदरिंद सामान्यजनरिगे अर्थवागुवदु श्रमसाध्यवु.

२. ई स्तुतिगे एतावत्पर्यंत प्रकटवागदे इद्दंथ, प्राचीनवाद, संस्कृत व्याख्यानद बोंदु प्रतियु नमगे परममान्यराद म. शा. सं. वेदमूर्ति, 'शिरोमणि', 'विद्वान्', 'चूडामणि' मुंताद योग्यतेयुळ्ळ रा. रा. हयवदनाचार्यरेंब हयग्रीवाचार्यरवरगळिंद संपादने माडिकळुहिसि परमोपकार माडलप्पट्टित्तु.

३. ई अपूर्ववाद व्याख्यानद प्रतियन्न धारवाड नगरस्थ रा. रा. कृष्णमूर्ति गोविंदराज कलकोटि, बि. ए., बि. टि., अवर्गळु प्रिण्ट् माडलक्के अनुकूलवाद रीतियल्लि बरेदु, प्रतिवोंदु श्लोकक्कु, कर्नाटकभाषान्तर माडि, मत्तु **श्री १०८ श्रीसत्यप्रियतीर्थर महिमे** मुंतादन्न बरेदु कळुहिसि, उपकार माडिद्दारे. इब्बरिगेनु नम्म प्रणामगळन्नु तिळिसि कोळ्ळुतेवे.

४. ई ग्रन्थदल्लि सेरिसिरुव, श्री सर्वज्ञरिंद परंपरावागि बंदिरुव "मध्वरायर देवतार्चनेयु" एंबो श्री पुरंदरदासरपददल्लि

वर्णने माडिरुव "२८ स्वयंव्यक्तप्रतिमागळ" स्तुतियु श्री सत्यसंध श्रीपादङ्गळवर्गळिंद 'रामचन्द्र' एंब पूर्वाश्रमद नामदिंद रचितवादद्दु. ई अपूर्ववाद पुस्तकवन्न नमगे कोट्टु उपकार माडिद्दक्के श्री १०८ श्री सत्यप्रमोदतीर्थर पूर्वाश्रमद तम्मन्दराद पूज्य विद्वान् श्री गुत्तल् हयग्रीवाचार्यरवर्गळिगे कृतज्ञतापूर्वक प्रणामगळन्न अर्पिसुत्तेवे.

५. नम्म अभिलाषा एनेंदरे, ई पुस्तकवन्नु प्रतिवोब्ब सद्वैष्णवरु स्वीकरिसि अर्थवन्नु तिळकोण्डु पठनमाडि, सर्वज्ञकल्पराद श्रीमट्टीकाकृत्पादर परमानुग्रहक्के पात्ररागि ऐहिकामुष्मिकसंपत्तुगळन्नु होंदबेकेंत, श्रीमज्जयतीर्थगुर्वन्तर्गत श्रीसीतारामचन्द्रदेवरन्नु प्रार्थना माडुत्तेनु.

श्रीरङ्गम् ,
दुर्मुखि नाम सं.
चैत्र शुद्ध १३, १८७८.

नम्म तीर्थरूपर आज्ञाप्रकार,
**एम्. के. वासुदेवः**

॥ श्रीः ॥



श्री श्रीनिवासाय नमः ।

## ॥ उपोद्घातः ॥

मोक्षो हि सकलाभीप्सितः । स च नारायणप्रसादसाध्यः । प्रसादश्च तत्स्तवेनैव भवति ।

"महत्त्वस्य परं पारं विदित्वैव जनार्दनः ।
स्तोष्यतामिति तुष्टत्वमिति नास्त्येव नारद ॥
किन्तु निश्चलया भक्त्या ह्यात्मज्ञानानुरूपतः ।
यः स्तोष्यति सदा भक्तस्तुष्टस्तस्य सदा हरिः ॥"

इत्युपासनापादीयानुव्याख्यानोदाहृतप्रमाणोक्तेः । ईश्वरप्रसादश्च गुरुप्रसादद्वारा जायते,

"अप्यच्युतो गुरुद्वारा प्रसादकृदहं त्विति ।" इति

महाभारततात्पर्यनिर्णयोक्तेः । गुरवश्च आदिगुरूणां श्रीसर्वज्ञभगवत्पादानामनन्तरं सर्वज्ञकल्पाष्टीकाकारा एव । यतो हि यत्कृतीनामुपजीवनमन्तरा सर्वज्ञशास्त्रे प्रवेशो दुश्शक इति निश्चप्रचं सर्वेषां विदुषाम् ।

श्रीजयतीर्थस्तवेषु च श्रीसत्यप्रियतीर्थश्रीचरणैर्विरचिता स्तुतिः बहुरमणीयतया प्रौढतामाटीकते । परं गम्भीरतया व्याख्यानमन्तरा दुरधिगमा इति व्याख्यानमपेक्षते । तामिमां चिरन्तनव्याख्यां समूलां श्रीटीकाकृत्पादेषु भक्त्यतिशयेन तत्प्रेरणया च स्वीयवित्तव्ययेनैव मुद्रापयित्वा भक्तजनानुपकुर्वाणानामेषां मङ्गल्वेड्कर् श्रीकुप्पण्णाराव् महोदयानां श्रीजयतीर्थादिसमस्तगुर्वन्तर्गतः श्रीश्रीनिवासो भगवान् श्रीरामचन्द्रः इतोऽप्यभ्यधिकां ज्ञानभक्त्यादिसमस्तसम्पदं दद्यादिति तमेव भगवन्तं प्रार्थये ।

जगद्गुरु श्री मध्वाचार्य
महासंस्थानम्,
**श्री उत्तरादिमठः,**
( मुकाम् ) श्रीरङ्गम,
चैत्रशुद्ध १३, १८७८.

विद्वज्जनविधेयः,
**गुत्तल हयवदनाचार्यः**
वेदान्तविद्वान्, चूडामणिः, न्यायशिरोमणिः.

॥ श्रीः ॥



श्रीजगद्गुरु मध्वाचार्यमहासंस्थान श्रीमदुत्तरादिमठाधीश

**श्री १०८ श्री सत्यप्रमोदतीर्थगुरुराजो विजयते ॥**

**[Photo taken on 16—6—1954 (Wednesday)
Jayanama Samvatsara Jyeshta Suddha Poornima
in the *Mahasannidhana of*
SRI TEEKAKRITPADACHARYA'S BRINDAVAN
at Malkhed.]**

॥ श्रीः ॥

॥ श्रीगुरुभ्यो नमः ॥

## ॥ अर्पणपत्रिका ॥

सुधायामद्वितीयोऽसौ विद्यादाने महापटुः ।
सत्यप्रमोदगुरुराट् राजते राजमानितः ॥

ई चिक्क ग्रन्थवु परमादरपूर्वक श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यनेकगुणसंपन्न सर्वतन्त्रस्वतन्त्र श्रीमद्रामचन्द्रवेदव्यासदेवर दिव्यश्रीपादपद्माराधक श्रीमद्वैष्णवसिद्धान्तप्रतिष्ठापनाचार्य श्रीसत्याभिज्ञतीर्थ श्रीपादवडेयर करकमल सञ्जात **श्रीसत्यप्रमोदतीर्थ** श्रीपादवडेयरवरिगे नम्म मेलिरुव परमानुग्रहद गुरुतिगागि अति भक्तियिंद अर्पिसलग्डुत्तदे.

इदरल्लि विशेषांश एनेंदरे, ई ग्रंथरत्नवु श्रीश्रीगळवरु संचारक्रमदिंद श्रीरङ्गक्षेत्रक्के विजयमाडिरुव संदर्भदल्लि, तत्रापि ग्रन्थकर्तृगळाद (मानामधुरेयल्लि वृंदावनस्थरागिरुव) श्रीश्रीसत्यप्रियतीर्थगुरुसार्वभौमर २१२ने आराधना महोत्सव पुण्यदिवसदल्लि, आ सर्वज्ञपीठदल्लि ईवाग विराजमानरागिरुव श्रीश्रीगळवर सन्निधानदल्लि समर्पणे माडो महाभाग्य नमगे दोरकितु.

| | |
|---|---|
| मङ्गळ्वेड्कर् निवास्, | नम्म तीर्थरूपराद |
| श्रीरङ्गम्, | वा. कृष्णाराय शर्मर आज्ञाप्रकार, |
| चैत्र शुद्ध १३, १८७८. | एम्. के. वासुदेवः |

॥ श्रीः ॥

"अक्षयं कर्म यस्मिन्परे स्वर्पितं
प्रक्षयं यांति दुःखानि यन्नामतः ।
अक्षरो योऽजरः सर्वदैवामृतः
कुक्षिगं यस्य विश्वं सदाजादिकम्"
प्रीणयामो वासुदेवं देवतामंडलाखंडमंडनम् ॥

— द्वादशस्तोत्रे, अ० ८, श्लो. ११-

(व्याख्या)—अक्षयमिति । यस्मिन् परे सर्वोत्तमे अर्पितं समर्पितं कर्म अक्षयं अक्षयफलजनकं भवतीत्यर्थः । यन्नामतो यस्य नामोच्चारणमात्रादपि दुःखानि सांसारिकानि प्रक्षयं आत्यंतिकनाशं यांति । यो विष्णुरक्षरः देहाच्च्युतिरहितः । योऽजरः वलीपलितादि-विधुरः । सर्वदैवामृतो नित्यमुक्तश्च । यस्य विष्णोरजादिकं ब्रह्मादिकं विश्वं सदा कुक्षिगं उदरगतं तं । पुनः किंभूतं? देवतामंडलाखंड-मण्डनं अलंकरणं वासुदेवं प्रीणयामः ॥

॥ शुभमस्तु ॥



॥ श्रीगुरुराजो विजयते ॥

॥ श्रीः ॥

॥ श्रीमदानन्दतीर्थवरदबदरीनिवासिबादरायणाय नमः ॥

श्री १०८ श्रीसत्यप्रियतीर्थविरचिता

# श्रीजयराजस्तुतिः ॥

धाटी श्रीजयतीर्थवर्यवचसां चेटीभवत्स्वर्धुनी-
पाटीरानिलफुल्लमल्लिसुमनोवाटीलसद्वासना ।
पेटी युक्तिमणिश्रियां सुमतिभिः कोटीरकैः श्लाघिता
सा टीका निचयात्मिका मम चिरादाटीकतां मानसे ॥ १ ॥

## संस्कृतव्याख्या ॥

श्रीमदस्मद्गुर्वन्तर्गतास्मत्कुलदेवतात्मकश्रीमन्नीरानृसिंहाय नमः ॥

क्षीराकूपारतनयाभर्तारं च गुरूनपि ।
नत्वा प्रसादात्तेषां तु व्याकुर्वे जयराट्स्तुतिम् ॥

इह हि सुखमेव मे स्यात् दुःखं मनागपि मा भूदिति निखिलापेक्षितमोक्षस्य ईश्वरप्रसादसाध्यत्वात् तस्य च गुरुप्रसाद-मंतरा अभावाच्च श्रीमदलवबोधागमव्याख्यातृत्वेन च जयतीर्थ-स्वामिनामेव मुख्यत्वेन तत्स्तुतिमेव कविः कैश्चित्पद्यैः करोति धाटीत्यादिभिः ॥ श्रीजयतीर्थवर्यवचसां जयप्रदं तीर्थं शास्त्रं यस्यासौ तथोक्तः । 'तीर्थं शास्त्रेऽध्वरे क्षेत्रे' इत्यभिधानं । श्रीमां-

श्चासौ जयतीर्थश्चासौ वर्यश्चेति विग्रहः । तस्य वचांसि वाक्यानि तेषां सा धाटी प्रनाडिका मम मानसे चिरादाटीकतां संचरेदित्यन्वयः ।। टीकृ गतावित्यतो लोट् । टीकतां टीकेतां टीकंतामिति रूपाणि । सा टीका कीदृशीत्यत आह — चेटीति । चेटीभवत्स्वर्धुनी । न चेट्यचेटी संपद्यमाना चेटीभवंती स्वर्धुनी भागीरथी यस्याः सा तथोक्ता । दासी कर्मकरी चेटीत्यमरः । 'मंदाकिनी वियद्गंगा स्वर्णदी सुरदीर्घिका' इत्यमरः । तटिनी ह्रादिनी धुनी इति च । एतेन गंगातीरप्रवाहापेक्षया अस्याः गांभीर्याधिक्यं सूचयति । पुनः कीदृशी । पाटीरानिलफुल्लमल्लिसुमनोवाटीलसद्वासना । पाटीरात् श्रीचंदनात् । श्रीचंदनं तु पाटीरमित्यभिधानम् आगतो योयमनिलो वायुः तेन फुल्लानां विकसितानां मल्लिसुमनसां मल्लिकापुष्पाणाम् । स्त्रियः सुमनसः पुष्पमित्यमरः । वाटी आकारः । वाटी पुष्पोपजीवनमित्यभिधानम् । तद्वल्लसन्ती वासना यस्याः सा तथोक्ता । अयं भावः—मल्लिकाकुसुमानि यथातिसंतोषकराणि किं पुनः मलयाचलवायुविकसितानि । इयमपि तद्वन्मनोह्लादकरीति ।। पुनः कीदृशी । युक्तिमणिश्रियाम् । युक्त्याख्यमणिश्रियाम् । पेटी मंजूषा । पेटी तु मंजूषेत्यभिधानम् । सुमतिभिः । शोभना मतिः येषां ते तथोक्ताः । तैः कोटीरकैः किरीटैः श्लाघिता । तद्वाक्सरणिं दृष्ट्वा किरीटशिरसा महान्तः श्लाघयन्तीति भावः । पुनः कीदृशी धाटी । टीकानिचयात्मिका । टीकानां निचयः समूहः । समूहो निचयश्चयः इत्यभिधानं । तदात्मिका इत्यर्थः ।। १ ।।



[कन्नडभाषान्तर ।।

श्रीगुरुभ्यो नमः ।। हरिः ।। ॐ ।।

भागीरथिये दासियाद, मलयाचलमन्दमारुतदिंद विकसितवाद मल्लिगेहूवुगळंते मनस्सिगे आनन्दप्रदवाद, युक्तिगळेंबो मणिगळपेट्टिगेयंतिरुव, मेधाविगळाद, देवतेगळिंद स्तुत्यवाद आनंदतीर्थर ग्रंथगळिगे टीकारूपवाद, श्रीजयतीर्थवरेण्यर वाणिय शैलियु नन्न मनस्सिनल्लि संचरिसलि ।। १ ।।]

टीकाकृज्जयवर्य संसदि भवत्येकान्ततो राजति
प्राकाम्यं दधते पलायनविधौ स्तोकान्यशंकाद्विषः ।
लोकान्धीकरणक्षमस्य तमसः सा कालसीमा यदा
पाकारातिदिशि प्ररोहति न चेद्राकानिशाकामुकः ।। २ ।।

सं० व्या० श्रीजयतीर्थगुरवे नमः ।। स्वदर्शनमात्रात् सकलदुरितादिपलायनकर्तृत्वरूपमहासामर्थ्यं वर्णयति टीकाकृदिति । सच्छास्त्राणां टीकाः करोतीति टीकाकृत् स चासौ जयवर्यश्चेति विग्रहः ।। तस्य संबुद्धिः ।। टीकाकृदिति भिन्नं वा पदं ।। भवति संसदि सभायां राजति सति द्विषः दुर्वादिनः । स्तोकान्यशंका स्तोकात् अल्पात् अन्या अनल्पा इति यावत् । स्तोकाल्पक्षुल्लकेत्यमरः । शंका येषां ते । तथा तादृशाः संतः एकांततः निश्चयेन रहसीति वा । पलायनविधौ पलायनविधाने प्राकाम्यं स्वेच्छत्वं । कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितं इत्यभिधानम् । दधते । डु धाञ् धारणपोषणयोरित्यतो लङ् । अयं

अस्मान् जित्वा मानं हरतीत्यतोऽपसराम इति मन्यंत इति भावः । ननु क्षुद्राः पलायन्तु नाम ये धैर्यशालिनः ते तिष्ठंत्वित्यतस्तत्सामर्थ्यमपि स्वत्पुरो नोदेतीत्येतत्सदृष्टांतमाह-लोकेति । लोकानंधीकर्तुं क्षमा सामर्थ्यं यस्य तत्तथोक्तं । क्षमा भूमौ सामर्थ्यं इत्यभिधानम् । तमसः यदा पाकारातिदिशि पाकः तन्नामकोऽसुरः तस्यारातिः शत्रुः इन्द्रः । बिडौजाः पाकशासनः इत्यमरः । तद्दिशि प्राच्यां । राकानिशाकामुकः राका पूर्णिमा । सा दृष्टेंदुकला राकेत्यमरः । तन्निशायाः कामुको नटः । यथा कश्चित् कांतया रंतुं क्रमेण संपादितसाधनः अथ तामाप्य सुखमनुभवति एवं चंद्रोपि शुक्लपक्षप्रतिपदमारभ्य क्रमैधितकलः सन् पौर्णिमामाप्य सुखी भवतीति भावः । चेत् इवार्थः । चेद्विकल्पे-ऽवधारणे इत्युक्तेः । न चेत्प्ररोहति नैवोदेति तदा सा कालसीमा कालस्य सीमा अवधिः । अयमभिप्रायः — यथा प्राच्यां सोमोदय-पर्यन्तं तमसोवस्थानं ततः तमो नश्यति तथा आचार्याणां समागम-पर्यन्तमेव दुर्वादिनामाटोपः । तद्दर्शने तु तत्सामर्थ्यं नोदेति इति ॥ २ ॥

[क० भा० टीकाचार्येरेन्दु प्रसिद्धराद श्रीजयमुनीश्वरे! तावु सभेयल्लि मंडिसिरुवाग, अनेक प्रकारद शंकेगळुळ्ळ दुर्वादिगळु "नम्मन्नु ई यतिपुंगवरु गेद्दु नम्म मान कळयबहुदेन्दु" ओडिहोगळु इच्छि-सुत्तारे. पूर्णचन्द्रन उदयवागुववरेगे कत्तले इरुवन्ते, तावु सभेगे दयमाडिसुववरेगे मात्र दुर्वादिगळ आटोपवु. तम्म दर्शनमात्रदिंद अवर सामर्थ्यवु कुग्गुत्तदे ॥ २ ॥]



छायासंश्रयणेन यच्चरणयोरायामिसांसारिका-
पायानल्पतमातपव्यतिकरव्यायामविक्षोभिताः ।
आयांति प्रकटां मुदं बुधजना हेयानि धिक्कृत्य नः
पायाच्छ्रीजयराट् दृशा सरसनिर्मायानुकंपार्द्रया ॥ ३ ॥

सं० व्या० श्रीटीकाचार्यगुरवे नमः । संसारातपक्लिन्नानां यदंघ्रिछाया-श्रयणेन सकलानिष्टनिवृत्तिप्राप्ती भवतः तच्चरणं प्रार्थयते—छायेति ॥ यच्चरणयोः छायासंश्रयणेन आश्रयेण । आयामिसांसारिकापायानल्प-तमातपव्यतिकरव्यायामविक्षोभिताः । आयामी आगन्तुके संसारे भवः सांसारिकः स चासौ अपायः क्लेशश्च स एव अल्पादन्यो अनल्पः अनल्प एव अनल्पतमः अतिशयार्थे तमप् । स चासौ आतपश्च तस्य व्यतिकरः न्यूनाधिकाभावलक्षणो व्यत्यासः तस्य व्यायामः विशेषेण संचारः तेन विक्षोभिताः श्रांताः । बुधजनाः ज्ञानिजनाः हेयानि त्याज्यानि अनिष्टानीति यावत् । धिक्कृत्य तिरस्कृत्य प्रकटां मुदं आयान्ति । सः गुरुः । सरसनिर्मायानुकंपार्द्रया रसेन स्नेहेन सहिता । गुणे रागे द्रवे रसे इत्यमरः । सा च सा निर्माया निष्कपटा अनु-कम्पा च तया आर्द्रया दृशा ज्ञानेन नः पायात् । ज्ञानं दत्वा अस्मान् रक्षतु इति हृदयम् ॥ ३ ॥

[क० भा० याव चरणकमलगळ नेरळन्नु आश्रयिसुवदरिंद आगन्तुक वाद अनेक सांसारिक तापगळेंब बिसिलिनल्लि संचरिसि दणिद सज्जनरू (ज्ञानिगळु) हेयवाद अनिष्टगळन्नु तिरस्करिसि श्रेष्टवाद आनन्द-

बन्नु पडेयुत्तारो अंथ गुरुवर्यराद श्रीजयमुनिगळु अन्तःकरणपूर्वक-
वाद निष्कपटवाद ज्ञानवन्नु कोट्टु नम्मन्नु रक्षिसलि ॥ ३ ॥]

श्रीवाय्वंशसुवंशमौक्तिकमणेः सेवाविनम्रक्षमा-
देवाज्ञानतमोविमोचनकलाजैवातृकश्रीनिधेः ।
शैवाद्वैतमताटवीकवलनादावाग्निलीलाजुषः
को वादी पुरतो जयीश्वर भवेत्ते वादिकोलाहले ॥ ४ ॥

सं० व्या० श्रीमदक्षोभ्यतीर्थतनयाय नमः ॥ 'गृहान् भक्षयतः पुंसः कवाटः पर्पटायते इत्युक्तन्यायेन अतिगर्विणां दुर्वादिनामेव आटोपस्य अवसरस्त्वरतो नास्ति किं पुनः यस्य कस्य वादिन इत्येतन्महामाहात्म्यं वर्णयति — श्रीवाय्वंशेति । जयो अस्यास्तीति जयी स चासौ ईश्वरः स्वामी च तत्संबुद्धिः हे जयीश्वर! श्रीवाय्वंशसुवंशमौक्तिकमणेः । श्रीमांश्चासौ वाय्वंशः मध्वश्च तस्य शोभनः वंशः स एव मौक्तिको मुक्तासमूहः तस्य मणेः । यथा मुक्तामालायाः प्रकाशको नायकमणिः, तथा अयमपि वंशस्य प्रकाशकः इति हृदयम् । सेवाविनम्रक्षमादेवाज्ञानतमोविमोचनकलाजैवातृकश्रीनिधेः सेवया विनम्राश्च ते क्षमादेवाश्च भूदेवाश्च । 'विपुला गह्वरी धात्री गोविला कुंभिनी क्षमा' इत्यमरः । तेषां अज्ञानं तम इव तस्य विमोचनं तस्य कला कौशलं तस्य जैवातृकस्य चंद्रस्य । जैवातृकः शशांकेत्यमरः । या श्रीः तस्याः निधेः आश्रयस्य । शैवाद्वैतमताटवीकवलनादावाग्निलीलाजुषः । शैवानां शिवसर्वोत्तमत्ववादिनां अद्वैतिनां अभेदवादिनां च ये मते ते एव अटव्यौ तयोः कवलनायां ग्रासे दावाग्नेः लीलां जुषतीति तथोक्तः । तस्य ते वादकोलाहले प्रवर्तमान इति शेषः । कोलाहलः कलकलः इत्यमरः । पुरतः को वादी भवेत् तिष्ठेत् इति भावः ॥ ४ ॥



[ क० भा० भो जयमुनीश्वररे! श्रीवायुदेवर अवतारराद श्रीमध्वाचार्यर समीचीनवाद वंशवेंब मुक्तामालेय मणिगळाद (प्रकाशकराद) निर्व्याजसेवेयिंद नम्रराद भूदेवतेगळ अज्ञानवेंब कत्तलेयन्नु खंडिसुव विषयदल्लि पूर्णचंद्रनंतिरुव, शिवसर्वोत्तमत्ववादिगळ अभेदवादिगळ मतगळेंब अरण्यवन्नु दहिसुवदल्लि दावानलवंतिरुव, तावु, दुर्वादिगळन्नु खंडिसुत्त समयदल्लि याव वादियुताने तम्मेदुरिगे बरलु धैर्यमाडबहुदु ॥ ४ ॥ ]

नीहारच्छविबिंबनिर्गतकरव्यूहाप्लुतेंदूपला-
नाहार्यसृतनूतनामृतपरीवाहालिवाणीमुचः ।
ऊहागोचरगर्वपंडितपयोवाहानिलश्रीजुषो
माहात्म्यं जयतीर्थवर्य भवतो व्याहारमत्येति नः ॥ ५ ॥

सं० व्या० तावकानन्यादृशमाहात्म्यवर्णनं अस्माकं नास्तीत्यत आह — नीहारेति ॥ हे जयतीर्थवर्य भवतो माहात्म्यं व्याहारमत्येति । व्याहार उक्तिर्लपितमित्यमरः । अत्येति व्यतिक्रमति । यावन्माहात्म्यवर्णनसामर्थ्यं अस्माकं नास्तीति भावः । एतादृशवतः । नीहारच्छविबिंब-

निर्गतकरव्यूहाप्लुतेंदूपलानाहार्यश्रुतनूतनामृतपरीवाहालिवाणीमुचः । नीहारवत् छविः कांतिः यस्य सः तथोक्तः । नीहारस्तुषारस्तुहिनं हिममित्यमरः । छविविद्युतिदीप्तय इति च । चंद्रः तस्य बिंबः । बिंबोस्त्री मंडलं त्रिषु इत्यभिधानम् । तस्मान्निर्गतानां कराणां किरणानां । भानुः करो मरीचिः स्त्रीत्यमरः । व्यूहः समूहः समूहनिवहव्यूहेत्यमरः । तेनाप्लुतश्चासौ इंदूपलः चंद्रकांतमणिश्च तस्मात् अनाहार्येण स्वभावेन सृतानां नूतनामृतपरीवाहानां ह्रदानां जलः । जलोच्छ्वासाः परीवाहाः इत्यमरः । अलिवत् पंक्तिवत् । वीथ्यालिरावलिः पंक्तिरित्यभिधानम् । वाणीं मोक्ति मुंचतीति वाणीमुक् तस्य । पुनः कथंभूतस्य । ऊहागोचरगर्वपंडितपयोवाहानिलश्रीजुषः । ऊहस्य अगोचरः अतर्क्य इत्यर्थः । तर्क ऊह इत्यमरः । गर्वो अभिमानो येषां ते । ते च ते पण्डिताश्च त एव पयोवाहाः पयः वहन्तीति पयोवाहाः मेघाः तेषां अनिलस्य वायोः संपदं जुषतीति तथोक्तः तस्य ॥ ५ ॥

[क० भा० चंद्रन बिंबदिंद होरडुव किरणगळ स्पर्शदिंद चंद्रकांतमणियु स्वाभाविकवागि सुरिसुव जलप्रवाहदंतिरुव वाणीयुळ्ळ, ऊहिसलु शक्यवल्लदष्टु गर्विष्टराद पंडितरेंब मेघवृन्दके प्रचंडमारुतवंतिरुव तम्म महिमेयन्नु वर्णिसलु नमगे सामर्थ्यविल्ला ॥ ५ ॥]

**वंदारुक्षितिपालमौलिविलसन्मंदारपुष्पावली-**
**मंदान्यप्रसरन्मरंदकणिकावृंदार्द्रपादांबुजः ।**



**कुंदाभामलकीर्तिरार्तजनतावृंदारकानोकहः**
**स्वं दासं जयतीर्थराट् स्वकरुणासंदानितं मां क्रियात् ॥६॥**

**सं० व्या०** श्रीजयतीर्थवर्याय नमः ॥ भूभरणाराधितचरणान् गुरुचरणान् करुणारसं प्रार्थयते — वंदारिवति ॥ वंदारिवत्यारभ्य पादांबुजः इत्यंतं एकपदं । वंदारव अभिवादकाश्च ते क्षितिपालाः राजानश्च । वंदारुरभिवादक इत्यमरः । तेषां मौलिषु विलसतां मंदारपुष्पाणां आवलयः पंक्तयः ताभ्यः । मंदादन्या (मंदान्याः) बह्वय इत्यर्थः । ताश्च ताः प्रसरंत्यश्च ता मरन्दस्य पुष्परसस्य कणिकाश्च तासां वृंदं । तेन आर्द्रौ च तौ पादौ च । तावंबुजे इव यस्य सः तथोक्तः । कुंदाभामलकीर्तिः कुंदेन कुंदपुष्पेण आभा सदृशी अमला कीर्तिर्यस्यासौ तथोक्तः । आर्तजनतावृंदारकानोकहः । आर्ता च सा जनानां समूहो जनता च । तस्याः । वृंदारकानोकहः वृंदारकाः देवाः तेषां अनोकहः वृक्षः कल्पतरुरिति यावत् । कल्पवृक्षवत् स्वाश्रितकामितदातेति भावः । वृंदारका दैवतानीत्यमरः । अनोकहः कुटः शाल इत्यमरः । जयतीर्थराट् स्वं दासं मां स्वस्य करुणया संदानितं बद्धं क्रियात् कुर्यात् डुकृञ् करण इति धातुः । बद्धे संदानितं मूतमित्यमरः ॥ ६ ॥

[क० भा० (भक्तिविवशरागि) वंदिसुव राजर शिरस्सिनल्लि शोभिसुव मंदारपुष्पगळ समूहदिंद हरियुत्तिरुव विपुलवाद पुष्परसदिंद तोयिद पादकमलगळुळ्ळ कुन्दपुष्पदंते निर्मलवाद कीर्तियुळ्ळ

आर्तजनर वृंदक्के कल्पवृक्षदंतिरुव श्रीजयराजरु तम्म दासनाद नन्नन्नु तम्म करुणापाशदिंद बंधिसलि ॥ ६ ॥ ]

श्रीदारांघ्रिनतः प्रतीपसुमनोवादाहवाटोपनि-
र्भेदातंद्रमतिः समस्तविबुधामोदावलीदायकः ।
गोदावर्युदयत्तरंगनिकरह्रीदायिगंभीरगीः
पादाब्जप्रणते जयी कलयतु स्वे दासवर्गेऽपि माम् ॥ ७ ॥

सं० व्या० श्रीयतिवरेण्याय नमः ॥ शिष्टाशिष्टेष्टानिष्ट-दातुर्गुरोः सेवां प्रार्थयते—श्रीदारेति ॥ श्रीः दाराः यस्य सः तथोक्तः पुंसि च दाराः शब्दः नित्यं बहुवचनम् । हृताश्च दाराः सुनृशंसकेनेति प्रयोगाच्च । तस्य अंघ्र्योश्चरणयोर्नतः । प्रतीपसुमनोवादाहवाटोप-निर्भेदातंद्रमतिः । प्रतीपाः द्वेषिणश्च ते सुमनसः पण्डिताश्च । सुमना विबुधो वेधा इत्यमरः । तेषां वादाख्याहवस्याटोपः संभ्रमः । आटोप-संभ्रमावित्यमरः । तस्य निर्भेदे विदारणे अतन्द्रा आलस्यरहिता मतिः यस्य सः तथोक्तः । तंद्री निद्राप्रमीलयोरित्यमरः । तंद्रेति पाठात्प्रकृत-प्रयोगः । समस्तविबुधामोदावलीदायकः । समस्तविबुधानां आमोदा-वलेः सन्तोषपंक्तेः दायको दाता । गोदावर्युदयत्तरंगनिकरह्रीदायि-गंभीरगीः । गोदावर्यां उदयन्तो ये तरंगाः तेषां निकरस्य समूहस्य ह्रीदायिनी लज्जाप्रदा गंभीरा गीः यस्यासौ तथोक्तः । नद्यः खलु गंभीरतरंगाः परंपराशीघ्रगामिन्यः ततोऽप्यतिगंभीरशीघ्रगामित्वाद्वाचां



तदपेक्षया तरंगाणां लज्जेत्युत्प्रेक्षा । जयी । पादाब्जे इव तयोः । प्रणते स्वे दासवर्गे मामपि कलयतु करोतु इत्यर्थः ॥ ७॥

[ क० भा० लक्ष्मीपतियपादभक्तराद, द्वेषिगळाद दुर्वादि-पंडितर वादसंभ्रमवन्नु खंडिसुवदल्लि आलस्यरहितवाद, बुद्धि युळ्ळ, स्वीयराद समस्तपंडितरिगे आनंदामृतवन्नु दयपालिसुवंथ, गोदावरीनदीय उन्नतरंगगळन्नु ह्रीयाळिसुवंथ वाक्तरङ्गगळुळ्ळ श्रीजय-तीर्थरु, तम्म, पादसेवकवर्गदल्लि नन्नन्नू स्वीकरिसलि ॥ ७ ॥]

विद्यावारिजषंडचंडकिरणो विद्यामदक्षोदय-
द्वाद्यालीकदलीभिदामरकरी हृद्यात्मकीर्तिक्रमः ।
पद्या बोधततेर्विनम्रसुरराडुद्यानभूमीरुहो
दद्याच्छ्रीजयतीर्थराड्धियमुतावद्यानि भिद्यान्मम ॥ ८ ॥

सं० व्या० श्रीमळखेडनिवासाय नमः ॥ अनिष्टनिरास-पूर्वकेष्टमेव प्रार्थयते — विद्येति ॥ विद्यावारिजषंडचंडकिरणः । विद्यालक्षणकमलसमूहविकासे चंडकिरणः सूर्यः । विद्यामदक्षोदय-द्वाद्यालीकदलीभिदामरकरी । विद्यामदेन क्षोदयंतः । क्षुत्क्ष्यंतश्च ते वादिनश्च । विद्यामदोद्रिक्ता इति यावत् । तेषां आलिः पंक्तिः एव । कदली तस्याः भिदायां अमरकरी ऐरावतः । हृद्यात्म-कीर्तिक्रमः । हृद्या मनोहरा च सा आत्मनः कीर्तिश्च तस्याः क्रमः परंपरा यस्यासौ तथोक्तः । बोधततेः ज्ञानसमूहस्य पद्या मार्गरूपः । सरणिः पद्धतिः पद्येत्यमरः । विनम्रसुरराडुद्यानभूमीरुहो विनम्राणां

विनीतानां, सुरराट् इन्द्रः तस्य उद्यानं वनं तस्मिन् विद्यमानो यो भूमीरुहः वृक्षः। कल्पवृक्ष इति यावत्। तद्वत् कामितदः इति भावः। श्रीजयतीर्थराट् धियं ज्ञानं मम दद्यात्। दा दान इति धातुः। उतानन्तरं अवद्यानि अज्ञानादिदोषान् भिंद्यात् नाशयेत्। भिद् विदारण इति धातुः ॥ ८ ॥

[ क० भा० विद्ये एंब कमलसमूहक्के सूर्यनंतिरुव, विद्येयिंद मत्तराद वादिगळ समूहवेंबुव बाळेतोटक्के ऐरावतदंतिरुव, मनोहरवाद कीर्तिपरंपरेयुळ्ळ, ज्ञानक्के मार्गरूपराद, तम्म पाददळि, विनम्रराद सज्जनरिगे कल्पवृक्षदंतिरुव, श्रीमज्जयमुनीश्वररु, ननगे सद्बुद्धियन्नु दयपालिसलि. अनन्तर नन्न अज्ञानादिदोषगळन्नु नाशमाडलि ॥८]

आभासत्वमियाय तार्किकमतं प्राभाकरप्रक्रिया
शोभां नैव बभार दूरनिहिता वैभाषिकाद्युक्तयः।
ह्रीभारेण नताश्च संकरमुखाः क्षोभाकरो भास्करः
श्रीभाष्यं जययोगिनि प्रवदति स्वाभाविकोद्यन्मतौ ॥ ९ ॥

सं० व्या० श्रीजयमुनये नमः ॥ महाशास्त्रव्याख्यातृत्वरूपमहामाहात्म्यं वर्णयति ॥ आभासत्वमिति ॥ जययोगिनि श्रीभाष्यं श्रीमच्च तद्भाष्यं ब्रह्मसूत्रभाष्यं च। श्रीमत्वोक्त्या इतरभाष्याणां अश्रीमतत्वं उक्तं भवति। तत् प्रवदति व्याख्याति सति तार्किकमतं आभासत्वं इयाय प्राप ॥ प्राभाकराणां प्रक्रिया शोभां नैव बभार।



वैभाषिका बौद्धाः एत्र आदयः येषां ते। तेषां उक्तयः वचनानि दूरनिहिताः दूरीकृताः ॥ संकरमुखाः ह्रीभारेण नताः ॥ भास्करः क्षोभायाः आकरः अस्य योभूदिति शेषः ॥ तदुत्कर्षदर्शनेन चिंताकुलोभूदिति भावः ॥ ननु एतादृशसामर्थ्यं अस्य कथं संगच्छत इत्यत उक्तं स्वेति। स्वाभाविका उद्यंती उत्कृष्टा मतिर्यस्यासौ तथोक्तः। तस्मिन् ॥ ९ ॥

[क० भा० स्वाभाविकवाद श्रेष्ठबुद्धिशक्तियुळ्ळ श्रीमज्जयतीर्थश्रीमच्चरणरु श्रीमध्वाचार्यरिंद रचितवाद श्रीमद्ब्रह्मसूत्रभाष्यवन्नु व्याख्यानमाडुवाग, तार्किकरमतवु आभासवायितु (अप्रामाणिकवायितु); प्राभाकरर प्रक्रिये शोभिसलिल्ल; बौद्धरे मोदलादवर युक्तिगळु निराकृतवादवु; संकरमोदलादवरु लज्जेयिंद बोग्गिदरु; भास्कराचार्यरु (श्रीजयतीर्थर उत्कर्षदिंद) चिन्ताकुलरादरु ॥ ९ ॥]

बंधानः सरसार्थशब्दविलसद्बंधाकराणां गिरा-
भिधानोर्कविभापरीभवझरीसंधायिना तेजसा।
रुंधानो यशसा दिशः कविशिरःसंधार्यमाणेन मे
संधानं स जयी प्रसिद्धहरिसंबंधागमस्य क्रियात् ॥ १० ॥

सं० व्या० श्रीमट्टीकाचार्यगुरुभ्यो नमः ॥ सच्छास्त्रनिष्ठां प्रार्थयते – बंधान इति। सरसार्थशब्दविलसद्बंधाकराणाम्। रसैः शृङ्गारादिरसैः सहितो अर्थो येषां ते सरसार्थाः ते च ते शब्दाश्च। तैः विलसंतश्च ते बंधाः प्रबंधाश्च। तेषां आकराणां आश्रयाणां गिरां

वाचां बंधानः । अर्कविभापरीभवझरीसंधायिना । अर्कस्य विभा द्युतिः तस्याः परीभवः पराभवः तस्य झरी परंपरा तस्याः संधायिना । सूर्यप्रभातिरस्कारिणेति यावत् । तेजसा इंधानः प्रकाशमानः । कविशिरःसंधार्यमाणेन कविभिः शिरसा संध्रीयमाणेन । यशसा दिशः रुन्धानः निरोद्धा । सः जयी मे प्रसिद्धश्चासौ हरिसंबंधागमः विष्णुसर्वोत्तमत्वप्रतिपादकशास्त्रं च तस्य संधानं संयोगं कुर्यात् ॥

[क० भा० श्रृंगारादिरसगळिंद युक्तवाद अर्थोपेतशब्दगळिंद राजिसुव प्रबंधगळिगे आश्रयवाद टीकेयन्नु रचिसिद, सूर्यन तेजस्सन्नु धिक्करिसुव प्रतिभेयिंद प्रकाशमानराद, ज्ञानिगळिंद स्तुत्यवाद कीर्तियिंद दश दिक्कुगळन्नु निरोधिसिद श्रीजयतीर्थरु प्रमाणप्रसिद्ध विष्णुसर्वोत्तमत्वप्रतिपादकवाद सच्छास्त्रद (अध्ययनरूप) संबंधवु ननगे आगुवन्ते अनुग्रहिसलि ॥ १० ॥]

संख्यावद्गणगीयमानचरितः सांख्याक्षपादादिनि-
रसंख्यासत्समयिप्रभेदपटिमप्रख्यातविख्यातिगः ।
मुख्यावासगृहं क्षमादमदयामुख्यामलश्रीधुरां
व्याख्याने कलयेद्रतिं जयवराभिख्याधरो मद्गुरुः ॥ ११ ॥

सं० व्या० श्रीजयमुनये नमः ॥ कविगंणगीयमानत्वादि-माहात्म्यमाह – संख्यावदिति ॥ संख्यावद्भिः पंडितैः गीयमानं स्तूयमानं चरितं चरित्रं यस्यासौ तथोक्तः । संख्यावान् पंडितः कविरित्यभिधानं । सांख्याक्षपादादिनिरसंख्यासत्समयिप्रभेदपटिमा



प्रख्यातविख्यातिगः । सांख्याश्च अक्षपादाश्च त एवादयो येषां ते । ते च ते निरसंख्याः अपरिमिताश्च ते असत्समयिनः दुःशास्त्रिणश्च । तेषां प्रभेदे पटिमा पटुत्वं तेन प्रख्यातेषु मध्ये विशेषेण ख्यातिं गच्छति प्राप्नोतीति तथोक्तः । क्षमा, दमः इन्द्रियनिग्रहश्च दया च तासां मुख्या च सा अमला च सा श्रीश्च तस्याः धूः भारो येषां ते । तेषां मुख्यावासगृहं मुख्यश्चासौ आवासश्च तस्य गृहं आश्रयः । जयवराभिख्याधरः धरतीति धरः जयवर इति अभिख्यायाः नाम्नः धरः मम गुरुः मद्गुरुः मध्वागमव्याख्याने स्वकृतसच्छास्त्रव्याख्याने रतिं आसक्तिं कलयेत् दद्यात् ॥ ११ ॥

[क० भा० ज्ञानिवरेण्यरिंद स्तुत्यवाद चरित्रेयुळ्ळ, सांख्य, अक्षपादरे मोदलाद दुर्वादिगळन्नु, निग्रहिसुव पटुगळेंदु प्रख्यातराद वरल्लि विशेषवागि ख्यातराद, क्षमा इन्द्रियनिग्रह मोदलाद गुण-गळिगे मुख्याश्रयराद 'जयवर' एंब नन्न गुरुवर्यरु, तम्म मध्वागमव्याख्यानरूपवाद टीकाग्रन्थगळल्लि ननगे आसक्तियन्नु दयपालिसलि ॥ ११ ॥]

आसीनो मरुदंशदाससुमनोनासीरदेशे क्षणा-
द्दासीभूतविपक्षवादिविसरः शासी समस्तैनसाम् ।
वासी हृत्सु सतां कलानिवहविन्यासी ममानारतं
श्रीसीतारमणार्चकः स जयराडासीदतां मानसे ॥ १२ ॥

सं० व्या० श्रीजयवराभिख्याधराय नमः ॥ आसीन इति ।

सः श्रीसीतारमणार्चकः जयराट् मम मानसे अनारतं निरन्तरं आसीदतां तिष्ठतु ।। कीदृश इत्यत आह – मरुदिति । मरुदंशो मध्वः तस्य दासा ये सुमनसः पण्डिताः तेषां मध्ये नासीरदेशे अग्रभूमौ आसीनः । पण्डितसमूहमध्ये अग्रप्रदेशगत इति भावः । क्षणात् दासीभूताश्च ते विपक्षाः शत्रवश्च ते वादिनश्च तेषां विसरः यस्यासौ तथोक्तः । सन्दोहविसरव्रजा इत्यभिधानम् । समस्तैनसां सर्वपापानाम् । कलुषं वृजिनैनोघमित्यमरः । शासी परिहर्ता । सतां हृत्सु वासः अस्य अस्तीति वासी । कलानां कौशलानां निवहस्य समूहस्य विन्यासः अस्तीति तथोक्तः ।। १२ ।।

[ क० भा० श्रीमरुदवतारराद श्रीमध्वाचार्यर दासराद पंडितरल्लि अग्रमण्यराद, क्षणदल्लि दुर्वादिगळ समूहवन्नु निग्रहिसि दुर्वादिगळन्नु स्वीयदासरन्नागि माडिकोंड, सकलपापगळन्नु परिहरि-सुव, सज्जनर हृदयमंदिरदल्लि राजिसुव, कलाकौशलगळुळ्ळंथ, श्रीमूलसीतारमणन्नु पूजिसुव श्रीजयतीर्थरु नन्न मनोमंदिरदल्लि सर्वदा सन्निहितरागलि ।। १२ ।। ]

पक्षीशासनपादपूजनरतः कक्षीकृतोद्यद्दयो
लक्षीकृत्य सभातले रटदसत्पक्षीश्वरानाक्षिपत् ।
अक्षीणप्रतिभाभरो विधिसरोजाक्षीविहाराकरो
लक्ष्मीं नः कलयेज्जयी सुचिरमध्यक्षीकृताक्षोभणाम् ।। १३ ।।

सं० व्या० श्रीसीतारमणार्चकाय नमः ।। अथ समा-



पितस्तवो भगवान् कविकुलचूडामणिः ग्रन्थकर्ता यथा खलु भगवद्भक्त-पूजा तथा भगवत्प्रीतिः ततो मोक्षो भवति इति तामेव संपदं प्रार्थयते – पक्षीति ।। पक्षीशो गरुडः सः आसनं वाहनं यस्य सः तथोक्तः । तस्य पादपूजने रतः । कक्षीकृतोद्यद्दयः कक्षीकृता उद्यद्दया उत्कृष्टा दया यस्यासौ तथोक्तः । सभातले रटदसत्पक्षीश्वरान् रटंतः अहमहं समर्थ इति ध्वनिं कुर्वंतश्च ते असत्पक्षीश्वरा दुःसिद्धांतिनश्च तान् लक्षीकृत्य आक्षिपत् निराचकार यः स इति शेषः । अक्षीणप्रतिभाभरः । न क्षीणा अक्षीणा अक्षीणा प्रतिभा प्रज्ञा तां भरतीति तथोक्तः । विधिसरोजाक्षीविहाराकरः । विधेः सरोजाक्ष्याः रामायाः सरस्वत्या इत्यर्थः । विहारस्य आकरः । जयी सुचिरं । अध्यक्षीकृताक्षोभणां । अध्यक्षीकृता प्रत्यक्षीकृता च सा अक्षोभणा च तां । विशेषणोभयपदकर्मधारयः ।* लक्ष्मीं संपदं नः कलयेत् दद्यात् इत्यर्थः । एतत्पठतां लक्ष्मीप्राप्तिः भवितव्येति भावेन ग्रंथांते लक्ष्मीप्राप्तिप्रार्थनमेव कृतमिति । अतः सर्वैरपि एतत्पठनीयम् । अशेषमतिमंगळम् ।। श्रीजयतीर्थमुनिवरेण्याय नमः ।। वृत्तं तु पद्यत्रयोदशक शार्दूलविक्रीडितं । अर्काश्वैर्यदिमः सजौसततगाः शार्दूलविक्रीडितमिति तल्लक्षणात् ।

---

* (अध्यक्षीकृतक्षोभणांमिति पाठे तु अध्यक्षीकृतः प्रत्यक्षीकृतः क्षोभणः यया तां । प्रकृतिपुरुषक्षोभकत्वात् क्षोभणपदवाच्यः विष्णुः । "उद्भवः क्षोभणो देवः" इति विष्णुसहस्रनामोक्तेः ।। विष्णुप्रत्यक्षसाधनीभूतां संपदं इति भावः ) ।

यत्प्रसादबलाच्चेयं व्याख्याता हि गुरुस्तुतिः ।
तानस्माकं गुरून् भक्त्या वन्दे वैराग्यभूषणान् ॥

[क० भा० श्रीजयतीर्थरु गरुडवाहननाद श्रीमूलरामदेवर पादपूजेयल्लि रतराद वोळ्ळे दयावंतराद, सभेगळल्लि वदरत्तकंथ (कूगाट्टमाडुव) दुर्वादिगळन्नु नामनिर्देशमाडि अवरेल्लरन्नु निराकरिसिदरु. क्षीणवागदे इरुव बुद्धियिंद पूर्णळाद सरस्वतीदेवियर विहारक्क आश्रयराद श्रीजयतीर्थरु प्रत्यक्षवाद नाशरहितवाद परमात्मन अपरोक्षज्ञानके साधनवाद संपत्तन्नु नमगे दयपालिसलि ॥ १३ ॥]

यदीयवाक्तरङ्गाणां विप्लुषो विदुषां गिरः ।
जयति श्रीधरावासः जयतीर्थसुधाकरः ॥ १४ ॥

[क० भा० विद्वांसरगळ मातुगळु, याव. जयतीर्थर मातुगळेंबो अले (तेरे) गळ बिंदुगळो, अंथ लक्ष्मीपतिगे वासस्थानराद जयतीर्थरेंबो चंद्रनु सर्वोत्कृष्टरागिद्दारे ॥ १४ ॥]

सत्यप्रिययतिप्रोक्तं श्रीजयार्यस्तवं शुभम् ।
पठन् सभासु विजयी लोकेषूत्तमतां व्रजेत् ॥ १५ ॥

[क० भा० श्रीसत्यप्रियतीर्थरिंद हेळल्पट्ट मंगळकरवाद श्री जयतीर्थर स्तोत्रवन्न पठनमाडुववनु सभेयल्लि जयशीलनागि लोकदल्लि उत्तमनागि आगुवनु ॥ १५ ॥]

इति श्रीमज्जयतीर्थस्तुतिः सव्याख्या संपूर्णा ॥
श्रीजयतीर्थगुर्वन्तर्गतमध्वेशार्पणमस्तु ॥
॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

॥ श्रीदिग्विजयरामो विजयते ॥

# ॥ अष्टाविंशतिप्रतिमास्तुतिः ॥

श्रीमदुत्तरादिमठस्थानां श्रीसर्वज्ञकरार्चितानां
स्वयंव्यक्तप्रतिमानां स्तुतिः ॥

## श्रीसत्यसंधश्रीपादकृता ॥

यदनुग्रहतः सर्वदिग्जयो भवतीप्सितः ।
नमाम्यहं दिग्विजयरामं पूर्णधियार्चितम् ॥ १ ॥

वंदे मंदेतरानन्दं दशस्यन्दननन्दनम् ।
शुभलीलजगन्मूलरामं पूर्णधियार्चितम्
(ब्रह्मकरार्चितम्) ॥ २ ॥

सीतां जनकसंजातां वातांशानंदसन्नुताम् ।
ख्यातां वेदैर्गुणव्रातां गीतां वंदे हरौ रताम् ॥ ३ ॥

वेदव्यास गुणावास श्रुतिस्तोमविकासक ।
पंचरूप नमामि त्वां पूर्णप्रज्ञकरार्चितम् ॥ ४ ॥

अर्वास्य सर्वगर्वात्म शर्वपूर्वसुपर्वभिः ।
वंद्य श्रीधर भो लक्ष्मीनारायण नमोस्तु ते ॥ ५ ॥

पयोम्बुवच्चेत्यत्रापीत्युक्तं साधयितुं पयः ।
दधि कुर्वंतमनिशं सेवेहं दधिवामनम् ॥ ६ ॥

नांचनं संचकाराहं पंचबाणेन वंचित ।
किंचांहसां संचयोस्ति पाहि पांचसुदर्शनि ॥ ७ ॥

चक्रांकितसुकायेष्टप्रद चक्रांकितानि माम् ।
पंच सिंचतु करणा सुधासारैरचंचलैः ॥ ८ ॥

दक्षिणावर्तते यस्मिन् लक्षणान्वितवारिजे ।
रक्षणार्थमहं सेवे दक्षिणावर्तवारिजम् ॥ ९ ॥

काम्यान्यकर्मगम्यश्रीस्वाम्यर्चार्चनसाधनम् ।
सम्यग्भक्त्या प्रणम्यालं स्तौ(नौ)म्यहं रम्यवारिजम् ॥ १० ॥

हरेर्निवासस्थानत्वादर्थाक्षयकरत्वतः ।
अक्षयाह्वय हे पात्र वंदेऽहं त्वां निरन्तरम् ॥ ११ ॥

पुष्कलैनःपुष्करदशुष्कान्यपवनायितम् ।
रामनिष्कमहं सेवे पुष्कराख्याह्वयांकितम् ॥ १२ ॥

मंतुमन्तं कंतुवशं हन्तुं दशमुखं खरम् ।
प्रवीणौ रामबाणौ तु प्रणौम्यघनिकृंतये ॥ १३ ॥

शिष्टश्रीसत्यबोधेष्टप्रदाष्टाविंशतिस्तुतिः ।
रामचंद्रेण (सत्यसंधेन) रचिता तरंगयतु मङ्गलम् ॥ १४ ॥



लक्ष्मीनारायणश्रीहयमुखदधिकृद्वामनश्रीधरेषु-
व्यासाशाजेतृरामाव्रनिजजनिसहितश्रीजगन्मूलरामान् ।
वंदे श्रीरामनिष्कामितमनिनुतसत्पंचसौदर्शनाख्यान्
पंचार्यैकद्विबाणांबुजयुगसहितानक्षयाख्यं च पात्रम् ॥ १५ ॥

रामाभिधं वंशपतिं श्रीमाधवमुनीडितम् ।
उमाधवमुखाराध्यं श्रीमाधवमहं भजे ॥ १६ ॥

अन्नदातः प्रसन्नश्रीविठ्ठलाक्षोभ्यसन्नुत ।
यन्नवेत्ताखिन्नचित्तापन्नस्तत्त्वयतोव माम् ॥ १७ ॥

॥ श्रीकृष्णार्पणमस्तु ॥

---

## ॥ पुरंदरदासर पद ॥

राग—मुखारिः ]  [ ताळ झंपे

मध्वरायर देवतार्चनेय प्रसिद्ध ।
रघुनाथरु पूजिसुव सोबगु नोडि ॥

मूलरघुपति ओंदु मुद्दुगानकि ओंदु
लीलदिग्विजय राम मूरुति ओंदु
सालग्राम हयग्रीव मोदलादवु नाल्कु
चलुव सुदर्शन मूरु चक्रांकिगळैदु (मध्व) १

अभिषेक शङ्खवोंदु अक्षयपात्रे ओंदु
उभय पश्चिमधे मुगलुयेरडु
शुभनिधि बलमुरी शङ्खवोंदु
रामबाणगळेरडु रामटंकि ओंदु (मध्व) २

वरव्यासमुष्टि नालक्कु
क्षीरदि लोल्याडुव कूर्मवोंदु
स्मरिशिप्पत्तेंदु मूर्तिगळनु
पुरंदरविठ्ठलन पूर्ण भक्तरेंब
ईरघुनाथतीर्थरु यष्टु पुण्यवंतरो (मध्व) ३

॥ श्रीकृष्णार्पणमस्तु ॥

---

जगन्नाथदासकृत

## श्रीगुरुपरम्परा पदगळु ॥

( संपादकरु, विद्वान्, शिरोमणि, चूडामणि, हयवदनाचार्य गुत्तल, जगन्नाथ दासर स्थलवाद मानवीयल्लिरुव प्राचीन प्रतिनोळ्गि संग्रहिसिद्दु )

राग—काम्बोदि ] [ ताळ झम्पे

पल्लवी

आनमिपे गुरुसन्ततिगे सतत
ज्ञान भक्त्यादिगळ करुणिसलि एनगेंदु ॥



हंसनामकहरि, ब्रह्मगुरुवर,
सरोजासनपुत्ररेन्देनिसिकोंब ।
आसनकसनन्दन ईमानासिकाशिष्य,
दूर्वासमुनि, ज्ञाननिधितीर्थर पदाब्जगळिगे ॥ १ ॥

गरुडवाहनतीर्थ, कैवल्य, ज्ञानेश । परतीर्थ,
सत्यप्रज्ञर, । वरकुमार तपोराज संयमि ।
विमल, करकमलसंजात अच्युतप्रेक्षरिगे ॥ २ ॥

श्रीमध्ववरपद्मनाभ नरहरिमुनिय
श्रीमाधवाक्षोभ्ययतिजयार्य ।
धीमन्त विद्याधिराज सुकवीन्द्र निस्सीम
वागीशयतिरामचन्द्रार्यरिगे ॥ ३ ॥

विद्यानिधिरघुनाथवर्योत्तम
करपद्मसंजात वेदव्यासर, । विद्यापति, ।
अधीश वेदनिधि, सत्यव्रत निधिय
शुद्धात्म सत्यनाथर पादकमलगळिगे ॥ ४ ॥

सत्याभिनवपूर्ण, सत्यविजय, प्रिय,
सत्यबोधर, सत्यसन्ध वरा
नित्यदलिनेनेदु कृतकृत्यनागुवे
बिंबमूर्ति जगन्नाथविठलन तोरिसलेन्दु ॥ ५ ॥

॥ श्रीकृष्णार्पणमस्तु ॥

॥ श्री सत्यप्रियगुरुराजो विजयते ॥

# ॥ श्री सत्यप्रियतीर्थर पद ॥

राग:— कल्याणि ] [ ताळ — झंपे

### पल्लवी

सत्याप्रिय गुरुराय । मंगळकाय ।
नित्यदल्लुभृत्यसहाय ॥

### अनुपल्लवी

मध्वमतांबुधिचन्द्र । सद्गुणसान्द्र । अद्वैतमताद्रि इन्द्र ॥
ईधरे योळगानिरुद्धनेंदद्दु, नेगेयलाकरबद्धकंकणरागि । सिद्ध-
प्रमेयगळनुद्धरिसिद परि । शुद्धसाखमार्गणगेद्दा ॥ १ ॥

वितरणदल्लि बहुशूर । कीर्तिविहार । सततवेंदार्थविचार ॥
मितिइल्लदे अच्युतन कथामृत । तत्वमार्गदल्लि विहितनिष्ठरिगे ।
नगुत पेळिद अद्भुत महिम । सुचरित आनन्दभरिता ॥ २ ॥

नेनिदवर सुरधेनु । निनगेल्लि नानु । एणेगाणे यणिसलु ॥
मनुमुनि सत्यबोधर । मनदल्लि निन्तु अर्चनेयन्तु । दिनदिनदि
घनवागि कैकोंब । गुणनिधि विजय विठ्ठलन चरणांबुज ॥
ध्यान माडुव त्राण ॥ ३ ॥ श्रीः ॥ श्रीः ॥ श्रीः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

---



॥ श्रीः ॥

॥ श्रीदिग्विजयरामो विजयते ॥



॥ श्रीसत्यप्रियतीर्थगुरुभ्यो नमः ॥

( वेगवतीतीरम्, मानामधुरै ).

* "श्रीसत्यविजयाम्भोधेर्जातं सत्यप्रियामृतम् ।
जरामृती जंघनीतु विबुधानां मुदे सदा ॥"

— ( श्लोक २८, श्रीमदुत्तरादिमठीय श्रीपादानां गुरुपरंपरास्तोत्रे ).

# ॥ श्रीसत्यप्रियाष्टकम् ॥

वंदे सत्यप्रियगुरुं वंदारुसुरसत्तरुम् ।
बृंदावने समासीनं मंदस्मितशुभाननम् ॥ १ ॥
श्रीसत्यपूर्णसंभूतं व्यासदूतं बहुश्रुतम् ।
दासचातकजीमूतं भूसुरेन्द्रमिह स्थितम् ॥ २ ॥
श्रीसत्यविजयांभोधिजातं श्रीशकरं भजे ।
केशवराख्यमधुरावासं श्रीशपदार्चकम् ॥ ३ ॥
भूतले ख्यातचारित्र्यं सेतुयात्राफलप्रदम् ।
वातपाताभिमुख्येन स्फीतकूर्मासने स्थितम् ॥ ४ ॥
वैघायसिमिळद्रम्यकृतमालासरित्तटे ।
मठे स्थितं महाश्चर्यचर्यं सतां सदाश्रये ॥ ५ ॥
सत्यबोधसमाराध्यं मत्तमायाप्रमाथिनं ।
चित्तशुद्धिप्रदं नृणां यत्यधीशमहं भजे ॥ ६ ॥
विप्रपुत्रं मठस्थं यः क्षिप्रं प्रादात्स्वकं जनम् ।
अग्रहीद्रामभद्रं यः विग्रहाच्छुभविग्रहम् ॥ ७ ॥
सत्यप्रियाष्टकं पुण्यं नित्यमंगलसाधकम् ।
प्रत्यहं पठतां भूयो वित्तसत्पुत्रदायकम् ॥ ८ ॥

यः क्षांतौ भवति स्वयंभवति भूजाजानिसंसेवने
गांभीर्यें बुधयत्यघौघहरणे गंगाति धीशोधने ।
शेषत्यर्थविवेचने गुरुवति श्रीरामति प्राभवे
तं वंदे मदभीष्टसंततिकरं सत्यप्रियाख्यं गुरुम् ॥ ९ ॥

इति श्रीसत्यधर्मयतिकृतं श्रीसत्यप्रियाष्टकम् संपूर्णम् ।

## ॥ श्रीमद्वेदेशतीर्थपूज्यचरणाराधक श्रीयादवार्यकृत लक्ष्मीस्तोत्रम् ॥

यस्याः कटाक्षमात्रेण ब्रह्मरुद्रेन्द्रपूर्वकाः ।
सुराः स्वीयपदान्यापुः सा लक्ष्मीर्मे प्रसीदतु ॥ १ ॥
याऽनादिकालतो मुक्ता सर्वदोषविवर्जिता ।
अनाद्यनुग्रहाद्विष्णोः सा लक्ष्मीर्मे प्रसीदतु ॥ २ ॥
देशतः कालतश्चैव समव्याप्ता च तेन या ।
तथाप्यनुगुणा विष्णोः सा लक्ष्मीर्मे प्रसीदतु ॥ ३ ॥
ब्रह्मादिभ्योऽधिकं पात्रं केशवानुग्रहस्य या ।
जननी सर्वलोकानां सा लक्ष्मीर्मे प्रसीदतु ॥ ४ ॥
यदुपासनया नित्यं भक्तिज्ञानादिकान् गुणान् ।
समाप्नुवन्ति मुनयः सा लक्ष्मीर्मे प्रसीदतु ॥ ५ ॥
विश्वोत्पत्तिस्थितिलया यस्या मंदकटाक्षतः ।
भवन्ति वल्लभा विष्णोः सा लक्ष्मीर्मे प्रसीदतु ॥ ६ ॥
अनालोच्यापि यज्ज्ञानं ईशादन्यत्र सर्वदा ।
समस्तवस्तुविषयं सा लक्ष्मीर्मे प्रसीदतु ॥ ७ ॥
अभीष्टदाने भक्तानां कल्पवृक्षायिता तु या ।
सा लक्ष्मीर्मे ददात्विष्टं ऋजुसंघसमर्चिता ॥ ८ ॥
एतल्लक्ष्म्यष्टकं पुण्यं यः पठेद्भक्तिमान्नरः ।
भक्तिज्ञानादि लभते सर्वान् कामानवाप्नुयात् ॥ ९ ॥

इति श्रीयादवार्यकृतलक्ष्मीस्तोत्रं संपूर्णम् ॥



॥ श्रीः ॥



॥ श्रीमध्वराजगुरुभ्यो नमः ॥

## ॥ श्रीयादवार्यकृतमध्वस्तुतिः ॥

यः सीतापतिमुद्रिकाधरकरो वारांनिधिं धीरधी-
रारादीक्ष्य सुरारिराक्षसपुरीं उल्लंघ्य यातः क्षणात् ।
यो वंद्यामचलत्सकुण्डललसद्गंडोथ चूडामणिं
संगृह्याप पतिं सवानरवरं मध्वं तमीडे गुरुम् ॥ १ ॥
यं संजीवनभूधरं हरिवरेष्वार्तिं सुरेन्द्रद्विषा
प्राप्तेष्वल्पपलालतूलमिव संगृह्यागतोऽजीवयत् ।
लंकास्थः पुनराक्षिपद्गिरिवरं स्वस्थानसंस्थोभवत्
दोष्णोर्यस्य हि वेगतो गिरिरसौ मध्वं नुमः संविदे ॥ २ ॥
यो गांधारसुतासुतादिनृपतीन् क्षोणीतलारोहिणः
तीक्ष्णाग्रोग्रगदाभिघातनिहतान् कृत्वाकरोन्निर्भराम् ।

भूमिं पार्थहितो यदूत्तमरतः कृष्णाकराब्जार्चितो
भीमो भारतवंशभूषणमणिर्मध्वं तमीडे गुरुम् ॥ ३ ॥

यः पाराशरकृष्णसूत्रहृदये सर्वोत्तमत्वार्थके
लोके संकरभाष्यतः प्रतिहते रुद्रादिदेवार्थितः ।
आदिष्टश्च मुरारिणा कृतवपुर्मह्यां तुरीयाश्रमं
प्राप्याविष्कृतवान् मुनीशहृदयं मध्वं नुमः संविदे ॥ ४ ॥

यो विद्यापतिपादयुग्मजलजे मग्नो विमग्नं जगत्
द्वैताभावपरे परात्मजगतो सिद्धांतमुद्धृत्य च ।
द्वैतं सत्यमितं युतं सुखमुखैः धर्मैरबाध्यं हरिं
सिद्धं मानगणात् विधाय विबभौ मध्वं तमीडे गुरुम् ॥

यो वेदेशमताब्धिवृद्धिकरणे पूर्णेन्दुवृन्दायितो
मिथ्यावादिकरीन्द्रदारणविधौ योऽसौ मृगेन्द्रायितः ।
रुद्रेन्द्रादिमनःकुशेशयमुदं दाने दिनेशायित
तं कालीसुतपादपद्मनिरतं मध्वं तमीड्यं नुमः ॥ ६ ॥

इति श्रीमद्वेदेशतीर्थपूज्यचरणाराधक श्रीमद्यदुपत्याचार्यकृत-

श्रीमध्वस्तुतिः समाप्ता ।

॥ श्रीमध्वेशार्पणमस्तु ॥

॥ श्रीकृष्णार्पणमस्तु ॥

॥ श्रीः ॥

॥ श्रीदिग्विजयरामो विजयते ॥

# श्री १०८ श्रीसत्यप्रियतीर्थर महिमे ॥

---

॥ श्रीसत्यप्रियतीर्थगुरुभ्यो नमः ॥

*"श्रीसत्यविजयाम्भोधेर्जातं सत्यप्रियामृतम् ।
जरामृती जंघनीतु विबुधानां मुदे सदा ॥"

—(श्लोक २८, श्रीमदुत्तरादिमठीय श्रीपादानां गुरुपरंपरास्तोत्रे)

श्रीसत्यप्रियतीर्थरु श्रीमदाचार्यर मूलसंस्थानवाद श्रीमदुत्तरादि-मठद वेदान्तसाम्राज्यदल्लि विलक्षणवाद पांडित्य, वैराग्य, तपस्सु, मोदलाद अनेक मंगळकरवाद गुणरत्नभूषितरागि राजिसिद गुरुराजरु, दिविजतरंगिणियन्नु (गंगानदीयन्नु) स्वसन्निधानदल्लिये प्रत्यक्षी-करिसिकोण्ड; मध्यरात्रियल्लि सूर्यनन्नु तोरिसिद; श्रीसत्यबोधतीर्थर गुरुगळु. ईथ महामहिमर महिमे अद्भुतवादद्दु एंदु श्रीविजयदासरू कोंडाडिद्दारे ।

गुरूत्तमर पूर्वाश्रमद हेसरू गार्लपाड रामाचार्यरेन्दु, श्रीमत्पूज्य गार्लपाड रामार्यरु, श्रीसत्यपूर्णतीर्थरु श्रीवेंकटगिरि यात्रेगे

---

* श्रीसत्यविजयरु एंबो (क्षीर) समुद्रदिंद उद्भविसिदंथ "सत्यप्रियरु" एंबो अमृतवु जरा, मृति एरडन्नू नाशमाडलि. ज्ञानिमळिगे यावागलू संतोषक्कोस्कर आगलि.

दिग्विजयमाडिदाग श्रीसंस्थानदल्लिये इद्दरु. श्रीसत्यपूर्णतीर्थरु वेंकटगिरियन्न हत्तुवाग तम्म शिष्यसमुदायद निष्टेयन्नु परीक्षिसलु "ब्रह्मचर्याश्रमवन्नु सरियागि पालिसि, ई दिनद वरेगू तिथित्रयगळन्नु सरियागि पालिसिदवरु यारादरु इद्दरे ननगे कैयन्न कोडिरि. नानु अंथवर कैयन्नु हिडिदुकोण्डु पर्वतारोहणवन्नु माडुवेनु" एंदोडने, श्रीमत्पूज्य रामार्यरुमात्र मुंदेबंदरु. श्रीमज्जयतीर्थरिंद रचितवाद श्रीमन्न्यायसुधेयन्नु श्रीसत्यपूर्णतीर्थरोडने पर्वतारोहणमाडुत्त, समग्रवागि ग्रंथापेक्षे इल्लदे पठिसि, गुरुगळ कृपाविशेषक्के पात्ररागि मुंदे केलवु दिनगळल्लिये श्रीसत्यपूर्णतीर्थरिंद तुर्याश्रमवन्नु स्वीकरिसिदरु. नूतन यतिगळिगे "श्रीसत्यप्रियतीर्थरु" एंदु नामकरण माडि चिक्क संस्थानदोंदिगे दिग्विजयमाडलु अप्पणेकोट्टरु. गुर्वाज्ञेयन्नु शिरसा धरिसि, गुरुभक्तिपरायणराद श्रीसत्यप्रियतीर्थरु, देशदेशगळल्लि संचरिसुत्त, अशेष दुर्वादिमत्तेभगळिगे यतिकेसरिगळागि, सत्सिद्धांतवाद श्रीमध्वशास्त्रद उपदेशामृतवन्नु, सच्छिष्यरिगे दयपालिसुत्तिद्द वृत्तांतवन्नु केळि, शिष्यैकवत्सलराद श्रीसत्यपूर्णतीर्थरु संतुष्टरागि, श्रीसत्यप्रियतीर्थर कीर्ति दिगंतदल्लि पसरिसि अवर दिव्योपदेशदिंद सज्जनरु उद्धृतरागलेंदु स्वोपास्य श्रीमूलरामचन्द्रन पादकमलगळिगे प्रार्थिसुत्तिद्दरु.

ओम्मे श्रीसत्यपूर्णतीर्थरिगे बहळ देहायासवागलु श्रीबाळाचार्यरेंब विप्रोत्तमरिगे आश्रमवन्नु दयपालिसि "श्रीसत्यविजयतीर्थरु"



एंदु नामकरणमाडि नारायणध्यानपररादरु. ई समयदल्लि श्रीसत्यप्रियतीर्थरु दूरदेशदल्लि इद्दरिंद श्रीसत्यविजयतीर्थर तरुवाय "संस्थानवु श्रीसत्यप्रियतीर्थरिगे सेरबेकेन्दु" तम्म प्रियशिष्यरिगे तिळिसिद गुर्वाज्ञेयन्नु केळि, गुर्वाज्ञापालनधुरंधरराद श्रीसत्यप्रियतीर्थरु श्रीसत्यविजयतीर्थर तरुवाय अंदरे शके १५५९ चैत्र कृष्ण एकादशी दिन संस्थानवन्नु स्वीकरिसि, दुर्वादिगळिगे प्रचंड सूर्यनन्तेयु, शिष्यकुमुदनिवहक्के चन्द्रनन्तेयु, शोभिसिदरु. दिग्विजयकालदल्लि शिष्यरिगे श्रीसुधादि ग्रन्थगळन्नु पाठहेळुत्ता दुर्वादिगळन्नु खंडिसुत्ता, श्रीसत्यप्रियतीर्थरु तत्कालीन राजरिंद अत्यन्त सन्मानितरादरु. "सुधा वा पठनीया वसुधा वा पालनीया" एंब उक्तिगनुसरिसि, श्रीमन्न्यायसुधामृतवन्नु मुखोद्गतवन्नागि माडिकोंड श्रीयतिपुंगवरु, श्रीकरवाद सुधाकारराद श्रीजयतीर्थरन्नु "धाटी श्रीजयतीर्थवर्यवचसां" इत्यादि त्रयोदश संख्याक श्लोकगळिंद कोंडाडि, हीगे कोंडाडुव भक्तरिगे श्रीकरसुधाकाररु श्रीविशेषवन्नु कोडलेन्दु प्रार्थिसिदरु.

आसेतु हिमाचलपर्यन्त संचरिसि "माध्वध्वज" वन्नु सर्वत्र हारिसि, शिष्यवृन्दवन्नु हरिसिद शिष्यवत्सलराद श्रीसत्यप्रियर महिमेयन्नु एष्टु कोंडाडिदरु कडिमेये!!

संचारक्रमेण मानामधुरेगे दिग्विजयमाडि, श्रीसत्यप्रियतीर्थ श्रीपादङ्गळवरु. बाल्यदिंदल् श्रीमठदल्लिये इद्दु सर्वमाध्वग्रन्थगळन्नु आमूलाग्रवागि अध्ययनमाडि, प्रीतिविशेषभाजनराद विरक्त्यादि-

गुणालंकृतराद श्रीमत्पूज्य रायचूर् रामार्यरिगे महासंस्थानप्रदानपूर्वक तुर्याश्रमवन्नु अनुग्रहिसि, "श्रीसत्यबोधतीर्थरु" एंदु नामकरण-माडिदरु. प्रतिनित्य नूतनयतिगळिगे पाठप्रवचनादिचातुर्यवन्नु तिळिसि शिष्योत्तमर भक्ति, वैराग्य, पाण्डित्य मोदलाद गुणगळन्नु नोडि नलिदाडुत्तिद्दरु. क्रमेण देहायासवागलु वेधवती नदीतीरदल्लिरुव "मानामधुरेयल्लि" शके १६६६. चैत्र शुद्ध त्रयोदशी दिन श्रीरामध्यानपररादरु.

"यः क्षांतौ भवति स्वयंभवति भूजाजानिसंसेवने
गांभीर्येंबुधयत्यघौघहरणे गङ्गाति धीशोधने ।
शैषत्यर्थविवेचने गुरुवति श्रीरामति प्राभवे
तं वन्दे मदभीष्टसंततिकरं सत्यप्रियाख्यं गुरुम् ॥"

[एवरु क्षमाविषयदल्लि भूमादेवियन्थेयु, सीतापतियाद रामदेवर सेवेयल्लि ब्रह्मदेवरंथेयु, गाम्भीर्यदल्लि समुद्रदंथेयु, पापसमूहवन्न नाशमाडोविषयदल्लि गङ्गानदीयन्थेयु, बुद्धिशोधना विषयदल्लि शेषदेववरंथेयु, युक्तायुक्तविचारदल्लि बृहस्पत्याचार्यरंथेयु, प्रभुत्वदल्लि रामदेवरंथेयु, इरुत्तिद्दारो, अंथ नन्न मनोभीष्टसमूहगळन्न कोडत्तक्कंथ, श्रीसत्यप्रियरेन्दु हेसरुळ्ळ गुरुगळन्न, नमस्कारमाडि स्तोत्रमाडुत्तेनु.]

॥ श्रीसत्यप्रियतीर्थगुरवे नमः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

—*—

॥ शुद्धिपत्रिका ॥

| पुटम् | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| | | विज्ञापनेयल्लि | |
| १ | ११ | श्लोकक्कु | श्लोकक्कू |
| १ | १३ | इवरिब्बरिगेनु | इवरिब्बरिगेनू |
| २ | ११ | माडुतेनु | माडुतेवे |
| | | व्याख्यानदल्लि | |
| ३ | ७ | संचस्सिलि | संचरिसलि |
| ४ | १७ | कळयबहुदेंदु | कळेयबहुदेंदु |
| ८ | १७ | प्रचंडमारुतवंतिरुव | प्रचंडमारुतरंतिरुव |
| ११ | ४ | खंडिसुवदल्लि | खंडिसुवदरल्लि |
| १३ | १० | शोभिसलिळ्ळ | शोभिसलिल्ल |
| १६ | १४ | श्रीमूलसीतारमणन्नु | श्रीमूलसीतारमणनन्नु |
| १८ | ५ | ( कूगाट्टमाडुव ) | ( कूगाटमाडुव ) |
| १८ | १६ | हेळ्ळापट्ट | हेळ्ळपट्ट |
| २० | ६ | सिंचतु | सिंचंतु |
| ,, | ,, | करणा सुधासारैरचंचलैः | करुणासुधासारैरचंचलैः |
| २५ | ५ | भूसुरेन्द्रामिह स्थितम् | भूसुराळिषु संस्थितम् |
| ,, | ७ | केशवराख्यमधुरावासं | कीशवीराख्यमधुरावासम् |
| ,, | ९ | वातपाताभिमुख्येन | वातपोताभिमुख्येन |
| ,, | १४ | मठस्थं | परेतं |
| ,, | ,, | प्रादात्स्वकं जनम् | प्रादात्स्वतेजसा |
| iv | ५ | वेधवती | वेगवती |



## सेवार्थिगळिगे मुख्यवाद विषय ।

श्रीमट्टीकाकृत्पादाचार्यर बृंदावनवु मळखेडदल्लि अदे. मळखेड एंब क्षेत्र निजाम् इलाखादल्लि अदे. ई स्थलक्के होगत्तक्कवरु सेण्ट्रल् रैल्वे 'वाडि' जंकषनिंद हैदराबादिगे होगुव लैनल्लि 'मळखेड रोड्' स्टेषनल्लि इळिबेकू. ई रैल्वे स्टेषनिंद मळखेड क्षेत्रक्के सुमारु ५ मैलु अदे. इदर समीपदल्लिने यरगोळ एंब स्थळवदे. इदु श्रीजयतीर्थरु तपस्सुमाडिद हागू श्रीमदानंदतीर्थर ग्रन्थगळिगे टीका माडिद स्थळवु.

श्रीमज्जयतीर्थर बृंदावन इरुव मळखेड क्षेत्र कागिणी नदी तटदल्लि अदे. प्रतिवर्ष आषाढ बहुळ पंचमी दिवस इल्लि उत्सव नडियुत्तदे. आग्ये पुष्कळ जनरु कूडुत्तारे. टीकाचार्यर वंशजरु मंगळवेडदल्लि इद्दारे. श्रीश्रीगळवरु मळखेडक्क होदर वोंदु दिवस संस्थानदिंदा श्रीटीकाचार्यर मनेयल्लि पूजा आगत्तक्क मर्यादे अदे.

मळखेडदल्लि श्रीजयतीर्थर गुरुगळाद श्री अक्षोभ्यतीर्थर बृंदावनवुकूड अदे.

---

# READY FOR SALE.

| | | Rs. | A. | P. |
|---|---|---|---|---|
| 1. | SHRI JAYATIRTHA VIJAYA (Part I) containing Anu-Jayatirtha Vijaya of Shri Vyasa Tirtha (in Sanskrit) TIKAKRIT PADASHTAKAM GRANTHAMALIKA STOTRAM etc. | 0 | 6 | 0 |
| 2. | *SHRI JAYATIRTHA VIJAYA (Part II) containing Karnataka Bhasha Anuvada (in Devanagari characters) of Shri Jayatirtha Vijaya of Shri Vyasa Tirtha, MADHVASHTAKAM (in Sanskrit) by Shri Raghuvarya Tirtha (i.e., the Guruji of Shri Raghoothama Tirtha) etc. | 0 | 6 | 0 |
| 3. | PRATAS SANKALPA GADYAM by Shri Raghavendra Tirtha (also containing) Shri Ranga Stotram | 0 | 4 | 0 |
| 4. | SHRI JAYARAJA STUTI (with Sanskrit and canarese commentaries & also Life sketch of Shri Satya-Priya Tirtha). | 0 | 8 | 0 |

* This book can be made use of independently to know the life and works of Shri Jaya Tirtha, in Canarese.

*For copies apply to:—*

**M. K. VASUDEVA RAO,**
'Mangalvedkar Nivas',
43, Ammamandapam Road,
SRIRANGAM.

N. B :— All books published by Shri M. RAMA RAO, B. A., L. T., Kumbakonam, can be had from us.

Printed at The Sri Vani Vilas Press, Srirangam–1956.